अज्ञातमन्यैरमितान्नदानादैश्वर्यमैशं भवती न्यनः (व्यनक्ति) ।
प्रकाशभावं प्रमदामुखेन प्रयाति गुप्तोऽसि(पि)भृशं किलार्थः ॥ ८६ ॥
आस्तां नि········श्मशानं वस्तां त्वचं वा विभु(वपु)रस्य भूतिम् ।
कथं विधत्तामखिलं किलेदं सत्यन्नपूर्णे तव संविधाने ॥ ८७ ॥
ईर्ष्यां किमाशाय गिरं वितीर्य गणे सुराणां·········तौघे । (?)
दिवानिशं देवि सुधान्नवृष्ट्या धिनोषि यत्त्रीण्यपि विष्टपानि ॥ ८८ ॥
जगन्मुखारोपणकृत्कपालं पतिर्दधावित्ययशः प्रमार्ष्टुम् ।
किमम्ब गृह्णासि करेण दर्वीं प्रतिक्षणं विश्वजनप्रतीक्ष्याम् ॥ ८९ ॥
त्रैलोक्यकुक्षिंभरिणा हरेण ताभ्यां च लम्बोदरषण्मुखाभ्याम् ।
अधिष्ठिते धाम्नि तवान्नभूमा जयत्ययं देवि जनार्तिहारी ॥ ९० ॥
तवास्पदं दातुमरुद्धवीना(?)माक्रान्तमुद्यानममर्त्यसालैः ।
वेश्माभिचिन्तामणिभिः प्रणीतं विश्राणनेनास्य किमम्ब भारः ॥ ९१ ॥
सर्वातिथि(थीं)स्त्वं खलु सर्वकालं निश्चिन्तमन्नानि दिशस्यपर्णे ।
न तत्र हेत्वन्तरमन्तरेण न्यग्रोधमालोग्रजपं प्रियं ते ॥ ९२ ॥
मातर्विशालाक्षि महार्हचेलस्रगङ्गरागप्रभृतौ स्वभूतिम् ।
सदोपयुङ्क्ते यदि शैलधन्वा कथं तदा ते घटतेऽन्नदानम् ॥ ९३ ॥
त्रैलोक्यसंतर्पणदानजन्मा दूरे गिरां त्वत्सुकृतातिरेकः ।
आस्ते कपर्दी यदनुग्रहेण वेधोमुखामर्त्यविरामसाक्षी ॥ ९४ ॥
स्रष्टुं प्रतिष्ठापयितुं जगन्ति हर्तुं तिरस्कर्तुमनुग्रहीतुम् ।
पितामहाद्याः प्रभवन्ति यत्ते सवित्रि दर्वीविभवः स एषः ॥ ९५ ॥
समाप्य नाथे सवनं द्वितीयमारब्धदीनागमनप्रतीक्षे ।
नवीनमन्नं नगजे भवत्या प्रदीयतां प्राघुणिकाय मह्यम् ॥ ९६ ॥
अपास्य षाण्मातुरमर्धपीतवक्षोजमभ्यागतवत्सले त्वम् ।
आगत्य वेगादमृतौदनं मे पिनाकपाणिप्रमदे प्रदेहि ॥ ९७ ॥



आनर्घमाणीकृशरापमध्यादार्तेन (?) कार्तस्वरदर्विकायाम् ।
भैक्षेण दाक्षायणि पावनेन मनोरथं पूरय मामकीनम् ॥ ९८ ॥
संतन्वतेव स्वमणीकलम्पटे····धूपदेशात्कृशतानुयोगात् ।
हस्तेन कात्यायनि हन्त कामं विश्राणय श्रान्तिविनोदनं मे ॥ ९९ ॥
हैयङ्गवीनस्तुतिशालिहस्तनखंपचं नव्यसितानमार्घम् ।
करस्फुरत्काञ्चनभाजनात्ते भवानि दिव्यं दिश पायसान्नम् ॥ १०० ॥
दृशोऽनुकम्पारसदीर्घिकाया नीलारविन्दैरिव निर्जिहानैः (?) ।
अपाङ्गपातैरनुगृह्य मातरामोदयान्नैरिममन्नपूर्णे ॥ १०१ ॥
श्रान्तः क्षुधा सायमहर्मुखे वात्यन्नं दिश द्वारमुपैमि यावत् ।
शिञ्जानमञ्जीरपदं समेत्य प्रयच्छ मे पार्वति तावदन्नम् ॥ १०२ ॥
आविष्कृतप्रार्थनमप्यकाले वीतक्षुधं मां गिरिजे विधेहि ।
प्रतीक्षते किं पृथुको जनन्याः स्तन्यामृतासारसमृद्धिवेलाम् ॥ १०३ ॥
अवश्यकर्तव्यतयानुवेलं महान्ति कर्माणि सदा दिशन्ति ।
पर्याप्तमम्ब प्रतिपादयान्नं कर्तुं न किंचित्क्षमते बुभुक्षुः ॥ १०४ ॥
नित्यान्नदे मे निजमूर्तिभारमचिन्तयित्वाशनमर्पयेथाः ।
आदाय दर्वीं क्वचिदासिकायै जगज्जनन्याः समयः कुतस्ते ॥ १०५ ॥
दूरे क्षिपन्ती गुणदोषचिन्तामिष्टाशनैरेधय मामनव्यम् ।
निजे तनूजे किल निर्गुणेऽपि व्यनक्ति वात्सल्यभरं सवित्री ॥ १०६ ॥
अन्नार्थिनं मां यदि चेद्धुनोषि कृपापराची गणये किमन्यत् ।
················································ ॥ १०७ ॥

दर्वीपायसभाजने कलयता युग्मेन हस्ताब्जयो-
रप्रत्यूहविभावितत्रिजगतीभिक्षाकनेत्रोत्सवा ।
वाचालाभरणं महानसगृहादन्नोपहारेच्छया
निर्यान्ती परदेवता मम मुहुश्चिन्तापथं गाहताम् ॥ १०८ ॥

स्तन्यास्वादकृते निरुध्य पुरतः संतन्वते प्रार्थनां
सेनान्ये सति पूर्वकायमसकृत् स्थित्या दिशन्ती स्तनौ ।
अस्तस्वेदपयःकणां(णा)प्रणयिनो हस्तेन वक्त्रादुमां(मा)
मृष्टान्नार्पणमर्थिनां विदधती(ती)मेधा महा(या)लम्ब(म्ब्य)ते॥१०९
स्मेरस्मेरमलीकचित्रकपरामर्शी श्रमाम्बोर्लवं
दिव्यास्ते व्यजनानिलाद्धरचलोत्तंसं दधाना मुखम् (?) ।
चेतो मे न जहातु सा भगवती कृत्वातिथेयीं कृपा-
माशी[राशि]परा गिरीशवसतिं प्रत्याव्रजन्ती जनैः ॥ ११० ॥
दृढभक्तितरङ्गितक्रमामथ मश्यन्नधिकालि देवताः ।
अविगाढपरं मनोगिरामधितानन्दममन्दमास्तिकः ॥ १११ ॥
आर्यश्चक्रसरोवगाहनियमैरश्रान्तयात्राक्रमै-
रस्माकं द्विजनौहितीविरचनैरावश्यकैरध्वरैः ।
विद्याव्याकरणैश्च शिष्यसदसे विश्वेशमाराधयन्
वाधूलान्वयमौलिरावसदसौ वाराणसीमृद्धिमान् ॥ ११२ ॥
प्रालेयाद्रिसुतासहायभजनप्रेमानुबन्धस्पृशे
विद्याशीलविनीत··········पो विश्राणनासङ्गिने ।
स्त्रैणपराङ्मुखाय····करुणामूर्ति····संबिभ्रते
मूर्ध्ना संनतिमग्रजाय महते मोदान्मुहुः कुर्महे ॥ ११३ ॥

इति श्रीवाधूलकुलजलधिकौस्तुभस्यातिरात्रयाजिनः साहित्यगुरोः कनकाठपाठबिरुदाङ्कस्य वेङ्कटेशसुमतिसहधर्मिणीमण्यनन्तम्मागर्भशुक्तिमुक्तामणेः समरपुङ्गवदीक्षितस्य कृतौ चम्पूकाव्ये यात्राप्रबन्धे परिपूर्तिशोभितविलासो नाम नवम आश्वासः ॥

वीतस्पृहाय विरजस्तमसे समस्तशास्त्र[श्रुति]स्मृतिविदे समदर्शनाय ।
सिद्धाशिषे भगवदङ्घ्रिसमस्तभक्तिसान्द्रप्रसन्नमनसे सदसे नमोऽस्तु ॥

समाप्तोऽयं ग्रन्थः ।